लघुनाटिका

# जन-गण-मन-समर्थनम्

(राष्ट्रवर्धने जन-गण-मन-समर्थनम्)

● चन्द्रगुप्तभारतीयः

(जनाः ए.टी.एम. पूरतः दीर्घातपिदीर्घपङ्क्त्यां पङ्क्तिबद्धाः सन्ति)

पत्रकारः (प्रथमं जनं प्रति) नमस्कारः ! कथमस्ति भवान् ?

प्रथमः जनः नमस्कारः ! भवद्भिः कथं दृश्यते ? पङ्क्त्यामस्मि । देशोन्नतये दीर्घपङ्क्त्यां तिष्ठन् अस्मि । बहु सम्यक् अनुभवामि । देशहिताय एकं कार्यं भवति, अहञ्च तस्मिन् स्वयोगदानं करोमि । गर्वितोऽस्मि । आनन्दितोऽस्मि ।

पत्रकारः (द्वितीयं जनं प्रति) दूरदर्शने , टी.वी. , फेसबुक, ट्वीटर मध्ये, समाचारेऽपि नेतारः वदन्ति यत् अनेन निर्णयेन सामान्यजनाः बहुकष्टैः पीडिताः सन्ति । भवान् किं चिन्तयति ?

द्वितीयः जनः ते भ्रष्टनेतारः केवलं मिथ्यामेव वदन्ति । केऽपि सामान्यजनाः पीडिताः न सन्ति । अत्र भवन्तः स्वयमेव पश्यन्तु , वयं सर्वेऽत्र सामान्यजनाः एव स्मः , किं भवन्तः अस्मान् पीडिताः पश्यन्ति किम् ?

तृतीयः जनः वयं समान्यजनाः तु देशवर्धनार्थाय निर्णयोऽयं सहर्षेण स्वीकृतवन्तः अपि च लेशमात्रमपि कष्टं न अनुभवामः । परञ्च ते नेतारः , धनिकाः,कृष्णधसेवकाः कृष्णजनाः अवश्यमेव कष्टैः पीडिताः सन्ति येषां पार्श्वे कृष्णधनरूपेण बहुरुप्यकानि गृहे सन्ति । वयं तु प्रफुल्लाः प्रसन्नाश्च स्मः । अपि च अस्मै निर्णयाय वयं सर्वे साधारणजनाः माननीयप्रधानमन्त्रीमहोदयाय बहुधन्यवादान् ज्ञापयामः ।

पत्रकारः (चतुर्थं जनं प्रति) भवन्तः पङ्क्त्यं दीर्घातपिदीर्घपङ्क्त्यां पङ्क्तिबद्धाः सन्ति, किं पीडायाः कष्टस्य क्लेशस्य चानुभवं न करोति ?

चतुर्थः जनः (साश्चर्येण) पीडा ! कष्टम् ! क्लेशः ! किमर्थम् ? देशहिताय किम् ? अहं तु आह्लादितोऽस्मि यत् राष्ट्रवर्धनाय मया स्वयोगदानं दत्तम् । यर्हि वयं कष्टस्यानुभवं त्यक्त्वा चलचित्रदर्शनार्थं दीर्घपङ्क्त्यां गन्तुं शक्नुमः , यर्हि जीयो-सीम-क्रीणार्थमपि दीर्घपङ्क्त्यां आगच्छामः , यर्हि रोडिज-ऑडिश-कृते दीघातपि दीर्घपङ्क्त्यां भवितुं शक्नुमः, यर्हि वीजा-कृते दीर्घपङ्क्त्यां स्वीकर्तुं शक्नुमः , तर्हि देशोन्नतये पङ्क्त्यां भवितुं न शक्नुमः ? शक्नुमः, निश्चितरूपेण सुखेन पङ्क्यां भवितुं शक्नुमः वयम् ।

पञ्चमः जनः वयं सर्वे राष्ट्रेन सह राष्ट्रनिर्णयेन सह च स्मः । यदि इतोप्यधिकं पङ्क्तिं भविष्यति तदापि वयं राष्ट्रहितेन सह स्मः । (पृष्टे तिष्ठन्तः सर्वान् जनान् सः पृच्छति) किं सर्वे राष्ट्रहितेन देशहितेन सह अस्ति न वा ?

सर्वे वदन्ति आम् ! आम् ! वयं सर्वे राष्ट्रहितेन देशहितेन सह स्मः । - 2

पत्रकारः (पङ्क्त्यां तिष्ठन् एकम् अन्यं जनं प्रति) अत्र ए.टी.एम. पूरतः, बैंक-पूरतः, डाकगृहं पूरतश्च पङ्क्त्यां वयं केवलं निर्धन-सामान्य-जनान् एव पश्यामः, धनिकान् धनाढ्यान् तु वयं पङ्क्त्यां कुत्रापि न पश्यामः । भवान् किं विचारयति, किं सर्वाधिकानि कृष्णधनानि निर्धनजानान् पाश्वे एव सन्ति ?

अन्यः जनः (पत्रकारं प्रति) बहुसम्यक् प्रश्नं पृष्टवान् भवान् । अहं वक्तुमिच्छामि यत्, केवलं धनिकजनान् एव नैव, अपितु तान् सामान्यजनान् अपि वयं पङ्क्त्यां न पश्यामः, ये कर्गजरुप्याकानि धनानि च व्यवहारे न व्यवहरन्ति । ते ए.टी.एम. कार्ड, डेबिट-कार्ड, क्रेडिट-कार्ड, नेट-बैंकिंग, इत्यादयः साधनेन स्वकार्यानि सम्पादयन्ति । अतः, ते जनाः प्रतिबन्धस्य पूर्वमपि

रुप्यकानां कृते ए.टी.एम. पूरतः, बैंक-पूरतः, डाकगृहं पूरतश्च पक्त्यां पूरतः तिष्ठन् न आसन् पुनश्च प्रतिबन्धस्योपरान्तं अपि ते पङ्क्त्यां तिष्ठन् न सन्ति।

पत्रकाऱः (पङ्क्त्यां पङ्क्तिबद्धं अपरं जनं प्रति) अधुना इदमपि श्रूयते यत् येषां गृहे विवाहोत्सवः वर्तते तेषां कृते समयोऽयम् अति-कष्टप्रदमस्ति। अस्मिन् विषये भवान् किं वक्तुमिच्छति ?

(तस्मिनेव क्षणे पृष्टतः एकः वृद्धजनः उच्चैः पत्रकारं आह्वयति।)

षष्ठमः जनः (वृद्धः) (पत्रकारं प्रति) भो पत्रकार ! अत्र आगच्छतु , अस्य प्रश्नस्योत्तरमहं दास्यामि, यतोहि मम गृहे विवाहोत्सवः प्रचलत्यधुना, अहञ्च धनाहरणाय अत्र पङ्क्त्यामस्मि।

(पत्रकारः वृद्धं समीपं गाच्छति।)

षष्ठमः जनः (वृद्धः) (पत्रकारं प्रति) भवान् सत्यं वदति। विवाहोत्सवगृहे तु अन्यथाऽपि कष्टं तु भवति। अनेन निर्णयेन कष्टं किञ्चित् अधिकं जातम्। अहमत्र प्रतिदिनमागच्छामि , धनं स्वीकरोमि , गृहं प्रति गच्छामि। परञ्च लेशमात्रमपि क्लेशं नानुभवामि। वृद्धोऽस्मि तथाऽपि दुःखितो नास्मि। यतोहि, अहं जानामि यत् , अहं तु केवलं स्वगृहस्योत्सवे संलग्नोऽस्मि, प्रधानमन्त्रिवर्याः तु राष्टस्योत्सवस्य विषये चिन्तिताः सन्ति। मया स्वजीवनं तु जीवितम् , अपि च येन केन प्रकारेण व्यतीतम् , परञ्च अधुना नवीनजीवनेभ्यः चिन्तयामि। विवाहगृहे निश्चितरूपेण अधुना बहुकष्टानि सन्ति , किन्तु अहम् उत्साहितोऽस्मि। प्रतिदिनं प्रसन्नमनसा अत्र आगच्छामि , धनं स्वीकरोमि , गृहं गच्छामि। मम पार्श्वे लेशमात्रमपि परिवेदना नास्ति। अहं तान् सर्वान् जनान् सम्बोधयितुमिच्छामि येषां गृहे विवाहोत्सवः प्रचलति – बन्धुजनाः ! कृपया कष्टानि विस्मृत्य सहर्षेन इमं देशहितकारीनिर्णयं स्वबालकेभ्यः बालिकेभ्यश्च भविष्यसाफल्यार्थाय स्वीकर्वन्तु।

(तस्मिन्नेव क्षणे पङ्क्त्यां तिष्ठन् कोऽपि अन्यः जनः, वृद्धं प्रति वदति।)

सप्तमः जनः (वृद्धं प्रति) सत्यं वदति भवान्। वयं सर्वे सदा सर्वदा राष्ट्रहिताय देशहिताय च वादं वार्त्तालापञ्च कुर्मः परञ्च यदा देशहिताय अवसरः आगच्छति तदा कष्टं सोढुं न शक्नुमः। "मुखेन धनाढ्याः वयं , न तु कर्मेण।"

अष्टमः जनः (सप्तमं जनं प्रति) क्षम्यताम् भ्रातः ! भवान् सत्यं वदति , परञ्च अधुना वयं तादृशाः अशिक्षिताः न स्मः , यत् कोऽपि आगत्य किमपि वदिष्यति , वयं स्वीकुर्मः च। शिक्षिताः जागरुकाः स्मः वयमधुना। केऽपि नेतारः धनिकाश्च प्रलोभनैः अस्मान् प्रलोभयितुं अधुना समर्थाः न सन्ति। अत्र वयं सर्वे देशहितायैव पङ्क्त्यां एकत्रिताः स्मः। भवान् स्वयमेव पश्यन्तु , देशहितायैव तु भवानपि अत्र पङ्क्त्यामस्ति। तर्हि अधुना कोऽपि अनेन वक्तुं न शक्तनोति यत् वयं केवलं "मुखेन धनाढ्याः , न तु कर्मेण।" वस्तुतः वयमधुना "मुखेन सह कर्मेणापि धनाढ्याः।" स्मः।

(पङ्क्त्यां स्थिताः सर्वे जनाः उच्चैः करतध्वनिना सह तस्य समर्थं कुवन्ति।)

पत्रकारः (षष्ठं जनं प्रति) भवान् कथं जानति यत् प्रधानमन्त्रिणा यं निर्णयं स्वीकृतं तं निर्णयं देशहिताय राष्ट्रहीताय वास्ति ?

नवमः जनः बहुसम्यक् प्रश्नं पृष्टवान् भवान्। श्रूयतां भो पत्रकारवर्य ! इमां वार्त्तां तु भवान् जानति एव यत् नेतृन् , धनिकजनाञ्च पार्श्वे बहु-कृष्णधनानि सन्ति। ते तानि कृष्णधनानि स्वगृहे स्वकार्यालये स्वकोषे अपि यत्रकुत्रापि स्थानं प्राप्यन्ति तत्र स्थापयन्ति। ते तानि धनान्योपरि करं न प्रयच्छन्ति। सत्यं वदामि खलु ?

पत्रकारः आम् ! सत्यम्।

दशमः जनः (पुनः) उत्तमम् ! यर्हि ते सर्वकारं प्रति करं न दास्यन्ति तर्हि कथं राष्ट्रस्य अपि च देशस्य विकासोन्नतिञ्च भविष्यति । कर-माध्यमेन तु राष्ट्रकोषः वृद्धिं प्रयाति । यर्हि राष्ट्रकोषे धनमेव न भविष्यति, कथं देशस्योन्नतिः भवति ? कथं युवानं कृते रोजगारस्यावसराः आयन्ति ? कथं अस्वस्थ्य-रुग्न-जनानां कृते स्वच्छ-सम्यक् च चिकित्सालयस्य निर्माणं भविष्यति ? कथं छात्राभिः शिक्षणार्थं अत्यधुनिक-सुविधा-युक्तस्य विद्यालयस्य, महाविद्यालयस्य, विश्वविद्यालयस्य च निर्माणं भविष्यति ? कथं राष्ट्रमयं ऋण-मुक्तो भविष्यति ? किं ऋण-मुक्ताभावेन राष्ट्रमयं विकासपथं प्रगतिपथञ्च प्रयाष्यति ? अत्र भवन्तः लघु-लघु-बालकान् बालिकाश्च पश्यन्ति । एषां बालकानां बालिकानाञ्च भविष्यविषये चिन्तयन्तु । भवान् वयञ्च स्व-जीवनं यथा-तथा व्यतीतवन्तः , परञ्च एतेषां पार्श्वे तु अधुना सम्पूर्ण-जीवनं रिक्तं अस्ति । वयं एतेषां कृते किं दास्यामः ? – रोजगार-रहित-भारतम् ? साधन-शून्य-चिकित्सालयम् ? अव्यवस्थित-शिक्षारहित-विद्यालयं-महाविद्यालयं-विश्वविद्यालयम् ? ऋण-युक्तं ऋणी-भारतम् ? अविकसित-भारतम् ? किं दास्यामः वयं एतेषां भविष्यानां कृते ? चिन्तयन्तु ! एते भविष्याः ! अस्माकं विषये , स्वपूर्वजस्य विषये अपशब्दाः न वदिष्यन्ति तर्हि किं वदिष्यन्ति ? वयं एतेषां भारतभविष्यानां कृते अधुना पङ्क्त्यामपि स्थातुं नेच्छामः । इतोऽप्यधिकं कष्टप्रदं किं भविष्यति यत् , राष्ट्रनिर्माणे वयं स्वयोगदानं तु न दद्मः विरोधं बहु-प्रबलरूपेण कुर्मः । धिक् अस्माभिः ! भारतस्योज्ज्वलभविष्याय प्रधानमन्त्रिणा यं निर्णयं स्वीकृतं तं निर्णयं निश्चितरूपेण राष्ट्रहिताय अस्ति । वयं सर्वे प्रधानमन्त्रिणा सह स्मः ।

(सर्वे उपस्थिताः जनाः उच्चैः करतलध्वनिना तस्य वचनस्य सराहनां कुर्वन्ति । मध्ये एन एकः नेता आगच्छति । करतलध्वनिं श्रुत्वा ते चिन्तयन्ति यत् करतमध्वनिरियं मम कृते एव अस्ति । नेतायाः सहयोगी जनाः पृष्टतः ध्वनिं वदन्ति – नेतावर्य जयतु ! नेतावर्य जयतु ! नेतावर्य जयतु !)

नेतावर्यः (जनान् सम्बोधयति) भ्रातारः भगिन्यश्च ! प्रधानमन्त्रिणा गृहीतं निर्णयोऽयम् अप्रशस्तप्रदं वर्तते । अहं जानामि भवन्तः सर्वे सामान्यजनाः कष्टैरिदं बहुपीडिताः सन्ति । परञ्च अधुना भवन्तः चिन्तां मा कुर्वन्तु । अहं भवद्भिः सह अस्मि, अपि च अस्य निर्णयस्य पूर्णरूपेण विरोधं करोमि । सामान्यजनान् कष्टमिदम् अहं द्रष्टुमपि न शक्नोमि ।

(पृष्टतः एकः अपरः – अष्टमः जनः नेतारं आहूत्य समीपमागनस्य प्रयत्नं करोति , परञ्च नेतारक्षकाः तं जनं विरमन्ति ।)

एकादशमः जनः नेतावर्य ! नेतावर्य !

(नेतावर्यस्य रक्षकाः तं विरमन्ति ।)

नेतावर्यः (सहर्षेणानुमतिं दत्त्वा) आगच्छन्तु ! आगच्छन्तु !

एकादशमः जनः (नेतावर्यं प्रति) क्षम्यतां नेतावर्यः । परञ्च कष्टं कुत्रास्ति ? मयात्र पङ्क्त्यां त्रिहोराः व्यतीताः , किन्तु मया कुत्रापि कष्टं न दृष्टम् । भवन्तः अधुना एव आगतवन्तः , कष्टमपि दृष्टवन्तः !!! मामपि द्राक्षन्तु । अहमपि तं कष्टं द्रष्टुमुतसुकोऽस्मि यं कष्टं भवन्तः दृष्टवन्तः ।

(नेतावर्यः साश्चर्येण चिन्तिमुखेन यत्र-तत्र पश्यति ।)

द्वादशमः जनः (नेतावर्यं समीपमागत्य, सविनयेन वदति) महोदय ! देशोन्नत्यार्थाय एकं सम्यक् कार्यमभवत् , किमर्मथं भवान् अस्माकं सहयोगं न करोति ? भवान् देशसेवकोऽस्ति , देशः अधुना प्रगतिपथं प्रति गच्छन् अस्ति, कृपयोज्ज्वलभविष्याय भवान् स्वयोगदानं देशवर्धनार्थं ददातु, न तु स्वार्थवशीभूत्वा देशापकर्षणं करोतु ।

त्रयोदशमः जनः (क्रुद्धं भुत्वा नेतावर्यं प्रति सङ्केतं कृत्वा) एषः देशसेवकः नास्ति, देशधनभोगकः एषः । सदा-सर्वदा सत्कार्यमपि स्वलोभाय असत्करोति, प्रगतिपथं बाधियति , विकासपथं अवरुद्धति । (पृष्टतः एकं जनं आहूय) भवान् कृपया अत्र आगच्छतु ।

चतुर्दशमः जनः	किम् अहम् ?

त्रयोदशमः जनः	आम् ! भवान् एव।

(एकादशमः जनः समीपं गच्छति।)

चतुर्दशमः जनः	आम् वदतु ?

त्रयोदशमः जनः	कृपया भवान् ममुखे हस्तेन ताडयतु।

चतुर्दशमः जनः	(साश्चर्येण) किमर्थम् ? नैव ! अहं न ताडयामि।

त्रयोदशमः जनः	चिन्ता मा करोतु। अहं वदामि। कृपया मां ताडयतु भवान्।

चतुर्दशमः जनः	सत्यं , ताडयामि ?

त्रयोदशमः जनः	आम् ! सत्यम्, ताडयतु।

(एकादशमः तनः शनैः ताडयति।)

त्रयोदशमः जनः	कृपया प्रबलेन ताडयतु।

चतुर्दशमः जनः	किम् ? परञ्च किमर्थम् ?

त्रयोदशमः जनः	अधुना प्रश्नं मा पृच्छन्तु , केवलं कार्यपूर्णं करोतु।

चतुर्दशमः जनः	(आम् उक्त्वा बलेन ताडयित्वा क्षम्यातामपि वदति।)

त्रयोदशमः जनः	आह ! बहु प्रबलेन ताडितवान् भवान्। (उग्रभूत्वा) परञ्च बहुसम्यक् कृत्वान् भवान्।अहं इमं नेतारं स्वमतं दत्त्वान् आसम्। धिक् अस्ति माम् ! मां कपोलोपरि ताडनमिदं तावत् कष्टप्रदं न आसीत् यावत् कष्टप्रदं एषाः नेतारः राष्ट्रस्य कपोलोपरि ताडयन्ति। अहं स्ववेदनां तु सोढुं शक्नोमि परञ्च राष्ट्रवेदनां सोढुं न शक्नोमि। राष्ट्रभविष्येन सह एषाः क्रीडन्ति।

पञ्चदशमः जनः	(दशमं जनं प्रति) भवन्तः तु स्व-त्रुटिं स्वीकृतवन्तः। (नेतारं प्रति) एषः कदा स्वत्रुटिं स्वीकरिष्यति ? एषः कदा स्वकपोलोपरि ताडनं स्वीकरिष्यति ?

(ताडनस्य वार्त्तां श्रुत्वा भयेन भीतः सः नेतावर्यः ततः शीघ्रं शीघ्रं पलायितवान्।)

सर्वे उच्चैः उद्घोषयन्ति – जयतु भारतम् ! वर्धतु भारतम् ! जयतु भारतम् ! वर्धतु भारतम् ! जयतु भारतम् ! वर्धतु भारतम् !

इति चन्द्रगुप्तभारतीयेन २०७३ विक्रमसम्वत्सरे (२०१६ ख्रिस्ताब्दे) लिखिता
“जन-गण-मन-समर्थम्” नामधेया संस्कृतलघुनाटिका समाप्ता